॥ आद्यास्तोत्रम् ॥

ॐ नम आद्यायै ।
शृणु वत्स प्रवक्ष्यामि आद्या स्तोत्रं महाफलम् ।
यः पठेत् सततं भक्त्या स एव विष्णुवल्लभः ॥ १॥

मृत्युर्व्याधिभयं तस्य नास्ति किञ्चित् कलौ युगे ।
अपुत्रा लभते पुत्रं त्रिपक्षं श्रवणं यदि ॥ २॥

द्वौ मासौ बन्धनान्मुक्ति विप्रवक्त्रात् श्रुतं यदि ।
मृतवत्सा जीववत्सा षण्मासं श्रवणं यदि ॥ ३॥

नौकायां सङ्कटे युद्धे पठनाज्जयमाप्नुयात् ।
लिखित्वा स्थापयेद्गेहे नाग्निचौरभयं क्वचित् ॥ ४॥

राजस्थाने जयी नित्यं प्रसन्नाः सर्वदेवता ।
ॐ ह्रीं ब्रह्माणी ब्रह्मलोके च वैकुण्ठे सर्वमङ्गला ॥ ५॥

इन्द्राणी अमरावत्यामविका वरुणालये।
यमालये कालरूपा कुबेरभवने शुभा ॥ ६॥

महानन्दाग्निकोने च वायव्यां मृगवाहिनी ।
नैरृत्यां रक्तदन्ता च ऐशाण्यां शूलधारिणी ॥ ७॥

पाताले वैष्णवीरूपा सिंहले देवमोहिनी ।
सुरसा च मणीद्विपे लङ्कायां भद्रकालिका ॥ ८॥

रामेश्वरी सेतुबन्धे विमला पुरुषोत्तमे ।
विरजा औड्रदेशे च कामाक्ष्या नीलपर्वते ॥ ९॥

कालिका वङ्गदेशे च अयोध्यायां महेश्वरी ।
वाराणस्यामन्नपूर्णा गयाक्षेत्रे गयेश्वरी ॥ १०॥

कुरुक्षेत्रे भद्रकाली व्रजे कात्यायनी परा ।
द्वारकायां महामाया मथुरायां माहेश्वरी ॥ ११॥

क्षुधा त्वं सर्वभूतानां वेला त्वं सागरस्य च ।
नवमी शुक्लपक्षस्य कृष्णसैकादशी परा ॥ १२॥

दक्षसा दुहिता देवी दक्षयज्ञ विनाशिनी ।
रामस्य जानकी त्वं हि रावणध्वंसकारिणी ॥ १३॥

चण्डमुण्डवधे देवी रक्तबीजविनाशिनी ।
निशुम्भशुम्भमथिनी मधुकैटभघातिनी ॥ १४॥

विष्णुभक्तिप्रदा दुर्गा सुखदा मोक्षदा सदा ।
आद्यास्तवमिमं पुण्यं यः पठेत् सततं नरः ॥ १५॥

सर्वज्वरभयं न स्यात् सर्वव्याधिविनाशनम् ।
कोटितीर्थफलं तस्य लभते नात्र संशयः ॥ १६॥

जया मे चाग्रतः पातु विजया पातु पृष्ठतः ।
नारायणी शीर्षदेशे सर्वाङ्गे सिंहवाहिनी ॥ १७॥

शिवदूती उग्रचण्डा प्रत्यङ्गे परमेश्वरी ।
विशालाक्षी महामाया कौमारी सङ्खिनी शिवा ॥ १८॥

चक्रिणी जयधात्री च रणमत्ता रणप्रिया ।
दुर्गा जयन्ती काली च भद्रकाली महोदरी ॥ १९॥

नारसिंही च वाराही सिद्धिदात्री सुखप्रदा ।
भयङ्करी महारौद्री महाभयविनाशिनी ॥ १०॥

इति ब्रह्मयामले ब्रह्मनारदसंवादे आद्या स्तोत्रं समाप्तम् ॥

॥ ॐ नम आद्यायै ॐ नम आद्यायै ॐ नम आद्यायै ॥